# जटासिद्धान्तचन्द्रिका

ध्यात्वा सर्वजगन्नाथं साम्बं सर्वार्थसाधकम्
क्रियते लक्ष्मणाख्येन जटासिद्धान्तचन्द्रिका १
पदद्वयमनुक्रम्य व्युत्क्रम्योत्क्रम्य संधिमत्
यथावत्स्वरसंयुक्तं प्रयुञ्ज्यात्सा जटा मता २
जटायां पञ्चधा सन्धिरार्षपौरुषभेदतः ३
आद्यन्तमार्षकं ज्ञेयं शिष्टमन्यत्र पौरुषम् ४
त्रिक्रमेष्वष्टधा सन्धिर्द्वौ द्वावार्षकसंज्ञकौ
अन्यत्र पञ्चधा सन्धिरार्षावाद्यन्तकौ स्मृतौ ६
अन्ये त्रयश्च चत्वारः पौरुषेया इति स्मृताः ७
लोपालोपे षत्वणत्वयत्वादेशागमादिषु ८
संहितावत्क्रमो ज्ञेयस्तद्वज्ज्ञेया जटा बुधैः ९
ह्रस्वभाजां पदानां तु ह्रस्वता पूर्वपौरुषे १०
आदावन्ते च दीर्घस्स्यान्मध्ये तूत्तरपौरुषे ११
आर्षे यस्य न कारस्य रेफयत्वं विधानतः १२
पौरुषेऽपि तथा भावस्तस्य स्यादन्यथा न तु
चादीनामेव वो लो पो मो लो पोऽक्विप्परस्य तु १४
स्थास्तम्भ्वोरेव सो लोप इति वेदविदो विदुः १५
अन्वित्यत्र ह्युकारस्य वकारे तन्निमित्तके १६
जटायां नैव लोपः स्याद्यथा संहितमन्तरा १७
सत्वेऽकारस्य पूर्वत्वं दीर्घस्याप्युपलक्षणम् १८
पत्तीवे ग्रहणात्किं च ग्नास्पतिस्तत्र दर्शनात्
यत्र स्यान्महिसृज्यद्ध्वं तत्र षत्वन्न पौरुषे २०
ऋवतः प्रतिषेधाच्च महि सप्त च दर्शनात् २१
टपूर्वस्य नकारस्य णत्वं कुर्याद्विचक्षणः २२
पदादौ पदमध्ये वा यथा वरणमदर्शनात् २३
पृक्तादपृक्ते दीर्घस्स्याद्गुणोऽवर्णोद्भवेद्यदि

अथवा देश ऊभावस्तत्तस्मात्सांहितेऽपि च २५
ग्रहणं त्वेकमुद्दिश्य पदं वै क्रियते यदि २६
तदन्यत्र तु न ग्राह्यं यज्ञटाभिमतैरिति २७
अन्वारभ्याऽन्यमन्नं चेत्यत्र णत्वं प्रसज्यते २८
यस्मात्पर्यादिपूर्वत्वं णत्वं तेषां तथापि न २९
उदथेत्यत्र दीर्घस्तु ह्रस्वस्याप्युपलक्षकः
तथा प्रपर इत्यत्र ह्रस्वो दीर्घोपलक्षकः ३१
अनित्यश्च विधिर्यत्र प्रोच्यते तत्र तत्र तु ३२
ह्रस्वस्य वाथ दीर्घस्योपलक्षणमुदीरिनम् ३३
आयोऽध्वर्यो क्रतो पूर्वे दोषः स्यात्प्रग्रहोऽपि च ३४
अन्यस्मिन् पूर्वके न स्यादनुलोमविलोमयोः ३५
द्वन्द्वेऽहोरात्परो यत्र ह्योत्वमाप्नोति नान्यथा ३६
मिथुनी न भवत्यत्र ह्यनार्षे परतः स्वरे ३७
इडस्परिधिरित्यत्र धमिश्रस्त्वनिषेधकृत् ३८
विश्वतः क्षत्रमित्यत्र कण्ठोक्तिर्नैव विद्यते ३९
राये अस्मानिति यश्चालोपस्तु परिकीर्तितः ४०
जटायामेव सज्ञेयो गतिरन्या न विद्यते ४१
कण्ठोक्तार्थिकयोर्यत्र विरोधः स्फूर्यते क्वचित् ४२
कण्ठोक्तस्तु बलीयान्स्यादाविश्शब्दस्तु साधकः ४३
अभिषण्णश्च यत्रैतन्मुख्य णत्वे प्रकीर्तितम् ४४
पदानां संहितायां स्यात्तस्यामेव प्रबुध्यते
अश्वाश्रुतिश्च यः प्रोक्तः पदेऽखण्डे च तं विदुः ४६
समासेनैव सज्ञेयो दृष्टोऽश्वाजनि कथ्यते ४७
एयातां ब्राह्मणायात्र त्वैकारस्सन्धितो भवेत् ४८
परवर्णे प्रसक्तं चेद्गणनातो निषिध्यते ४९
कुत्रचित्स्वरवर्णाभ्यां यद्यभेदः पदद्वये ५०

तत्रानुक्रम एवालं न वदेद्युत्क्रमादिकम् ५१
उपेत नेति चात्रैतत्तृतीयत्वं प्रसज्यते ५२
अलोपानन्तरं तत्तु शग्रहान्नेष्यतेऽपि हि
सुवोरोहावेति तु यत्तत्र लुप्तो विसर्गकः ५४
पुनर्ग्रहणसामर्थ्यादोत्वमाप्नोतिरोत्तरे ५५
द्यौरहनी इति तु यन्निमित्तं दृश्यतेऽत्र वै ५६
णत्वस्य भिन्नदेशीयस्थत्वाच्चैव न विद्यते ५७
कृधिसुवः स्वानासोदिव्यधिकं नैव दुष्यते ५८
अस्मिन् यज्ञे जटायां तु ह्यग्नयः पप्रयोऽप्सुयः ५९
वनस्पतिभ्यश्चोपरि निमित्तं परिपूर्वतः ६०
त्वं न स्यात्प्रपूर्वत्वे स्यादन्याकर्षकश्च चः ६१
त्रिष्टुगायुरिति ह्येतद्यत्र क्व च न पौरुषे ६२
षत्वमेव च कुर्याद्धि सकारान्तत्वमूलतः ६३
अहारहश्च सूत्रे यदकारग्रहणं वृधा ६४
हास्त्यागावर्णलाभाच्चाप्यकारादि च संग्रहात् ६५
तत्र पूर्वं पूर्वमितीत्येकं तत्र निरर्थकम् ६६
पूर्वसूत्रेणैव किल अन्यथा सिद्धिकार्यकम् ६७
सस्त्रीषं सादमित्यत्र ह्यनुस्वारागमो भवेत् ६८
वर्णस्य संहितायां तु यतः स्पष्टो मलोपकः
अनित्यत्र निमित्तं यल्लोपालोपस्थले च तत् ७०
साधारणं तु विज्ञेयमन्यत्रैकमसंशयम् ७१
आकारपूर्वस्ते शब्दः प्रग्रहो गृह्यते यदि ७२
अखण्डे च पदे स स्यात्तत्प्रवाते विपक्षकः ७३
पुनरुक्तं यतः पञ्च पदमित्युत्तरं च वा ७४
ऋक्षु ब्राह्मणवाक्येषु ह्यलं द्वित्रिपदादिकम् ७५
परित्वा पुनरूर्जायन्नोऽस्य रातीयतोऽपि च ७६

सप्ततेऽपो अनुत्वग्ने त्वं गो मांश्चाधिरोचने ७७
चित्रं च भवतं द्रप्सस्सहस्व पुनरैक्यगाः ७८
आयुर्यज्ञेन वाजश्च प्राणम्मे चायुरेव च ७९
वस्वव्रतपास्सूर्ये परोऽग्नचादयः पुनः ८०
येनाग्नेस्मिन् सधस्थे च वाज्यद्ध्वादिह्य नैक्यगाः
त्रिपदप्रभृतिन्यायो लोपालोपेषु विद्यते ८२
तत्र स्थमन्ययुक्तं चेत्पूर्वधर्मो न विद्यते ८३
क्रम्याद्ध्वनो भवत्यग्रे पावकोऽर्पयतीति च ८४
विषयेऽङ्गिर इत्येवाप्यग्नयो ग्रहणं यथा ८५
त्रिपदप्रभृतिर्लोपालोपयोरेव विद्यते
उपबन्धो यथान्यत्र न प्राप्नोति स्वरूपतः
यच्चानिति पर इति रेफयत्वार्थमाहवै ८८
अनार्ष एव विज्ञेयश्चपयानिति दर्शनात् ८९
पपूर्वस्य छकारस्य द्वित्वं कुर्याद्विचक्षणः ९०
पदादौ पदयोरेकामपच्छिद्येति दर्शनात् ९१
य इच्छति जटां वक्तुं स विप्रो वेदपारगः
तस्य कीर्तिर्विवर्द्धते स वेदफलमश्नुते १
संहितां च पदं वापि क्रमं चैव जटां पठन्
लक्षणज्ञस्तदाप्नोति ब्रह्मज्ञानं हि शाश्वतम् २
प्रातिशाख्यादिशास्त्रज्ञस्सर्वशिक्षाविशारदः
बुद्धिशक्तिसमेतोगस्स जटां वक्तुमर्हति ३
ध्यात्वा सर्वजगन्नाथं साम्बं सर्वार्थसाधकम्
रचिता लक्षणाख्येन जटासिद्धान्तचन्द्रिका ४

इति श्रीलक्ष्मणाख्यबुधेन विरचिता
जटासिद्धान्तचन्द्रिका

